

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

फेब्रवरि २०२० रू.५/-

श्रीनिवासमङ्गापुरस्य
श्रीकल्याणवेङ्कटेश्वरस्वामिनः
वार्षिक ब्रह्मोत्सवः

१४-०२-२०२० तः
२२-०२-२०२० पर्यन्तम्

# श्रीनिवासमङ्गापुरस्य
# श्रीकल्याणवेङ्कटेश्वरस्वामिनः
## वार्षिक ब्रह्मोत्सवः
## १४-०२-२०२० तः
## २२-०२-२०२० पर्यन्तम्






**१४-०२-२०२० भृगुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**१५-०२-२०२० स्थिरवासरः**
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**१६-०२-२०२० भानुवासरः**
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

**१७-०२-२०२० इन्दुवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ -सर्वभूपालवाहनम्

**१८-०२-२०२० भौम्यवासरः**
प्रातः -
आन्दोलिकायां मोहिन्यवतारः
रात्रौ - गरुडवाहनम्

**१९-०२-२०२० सौम्यवासरः**
प्रातः - हनुमद्वाहनम्
सायं - वसंतोत्सवः
रात्रौ - गजवाहनम्

**२०-०२-२०२० बृहस्पतिवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**२१-०२-२०२० भृगुवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**२२-०२-२०२० स्थिरवासरः**
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



## गीतामृतम्

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमिते।।

हे द्रोणाचार्य! मम सैन्ये ये विशिष्टाः सेनापतयः सन्ति तान् भवान् जानाति एव। तथापि भवतः संज्ञानार्थं तेषां नामानि अहं स्मारयामि।

(भगवद्गीता १/७)

## जगन्नाथाष्टकम्

महाम्भोधीस्तीरे कनकरुचिरे नीलशिखरे
वसन् प्रासादान्तः सहजबलभद्रेण बलिना।
सुभद्रामध्यस्थः सकलसुरसेवावसरदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।

(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)



पूर्वसमुद्रस्य तीरे नीलाचलः वर्त्तते। नीलाचले मन्दिरं स्वर्णकान्तिशिखरं भवति। तत्र महत् भवनं भवति। तत्र तु बलभद्रः एकस्मिन् पार्श्वे। जगन्नाथ एकस्मिन् पार्श्वे भवतः। सुभद्रा मध्ये भवति। एवं जगन्नाथः सर्वदेवैः सेवितुम् अवसरं ददाति। तादृंशः जगन्नाथः मम प्रत्यक्षं भवतु।

सम्पादकीयम्

# आरोग्य प्रदाता आदित्यः

‘‘आदित्यानामहं विष्णुः ज्योतिषां रविरंशुमान्’’! इति भगवद्गीतायां श्रीकृष्णः कथयति!

अपूर्वकान्तेः विषय कथनावसरे सूर्यः एव परमोन्नत प्रमाणं भवति। तदर्थमेव अनन्त वाङ्गमय प्रपञ्चे कोटि सूर्य प्रभाभासितः सहस्रकिरणतेजो विराजितः इति श्रीमन्नारायणं कथयन्ति।

सर्वेन्द्रियाणां नयनं प्रधानमित्युक्तरीत्या सर्वेषां लोकानां नेत्र तुल्यः भवति सूर्यः। सम्पूर्ण प्रपञ्चः सहस्रकिरण भास्करानुग्रहेण प्रकाश्यते। तदर्थमेव सुन्दरप्रकृतेः तथैव भगवत्सृष्टेः दार्शकः सूर्यः विराट् पुरुषस्य नेत्र नाम्ना व्यवहृतः। विश्वान्तराले अनन्तज्योतिश्चक्रमिव परिभ्रमन् सर्वान् ग्रहान् तं परितः भ्रामयन् दिवा रात्रि, पक्ष, ऋतु मास, अयन संवत्सरान् सृजन् महत्तर काल गमनं प्रदर्शयन् प्रत्यक्ष दैवेव नभोमण्डले प्रकाश्यते।

‘‘आरोग्यं भास्कारादिच्छेत्’’ इति वचनरीत्या अयं प्रभाकरः ऐश्वर्य, आरोग्य, सन्तान, विजयानर्पयन् सर्वसिद्धि प्रदातेव विराजते। प्रतिनित्यं स्वप्रकाशेन समस्त चराचर वस्तूनां जागरणं कारयन् प्रकृतौ विद्यमान् समतुल्यतां परिरक्षयन् सम्पूर्ण लोकस्य नेत्रेव भासन् तस्य विधिं निर्वर्तयति। कालगमनं, कालतत्त्वं पतिक्षणं प्रत्यक्षं दर्शयन् निखिल लोकस्य’’ बन्धुरूपेण विलसति। अनन्त तेजो विराजितं, सकलदेवतास्वरुपम् श्री सूर्यनारायणं अनेके महानुभावाः अर्चयित्वा इष्टार्थ सिद्धिमवापुः। कलियुग भूलोक वैकुण्ठे विराजमान वेङ्कटेश्वरः भास्करं अर्चयित्वा महालक्ष्मीं प्राप्तवान्। कुन्ती देव्यपि सहजकवच कुण्डल विराजितं कर्णं प्राप्तवती। धर्मराजस्य अरण्यवास समये आहार समस्यापनोदनाय अक्षय पात्रं प्रदत्तवान् राम भक्ताग्रेसरः भविष्यत् ब्रह्मा आञ्जनेयोऽपि सूर्य निकषैव विद्याध्ययनं कृतवान्। श्रीरामः सूर्यं आरध्यैव युद्धे विजयलक्ष्मीं प्राप्तवान्। सत्राजित्तपि सूर्योपासन द्वारा शमन्तक मणिं प्राप्तवान्। याज्ञवलक्य महामुनिः सूर्यस्य निकटे शुक्ल यजुर्वेदाध्ययनं कृतवान्।

अयं सूर्यनारायणः सूर्य जयन्ति नाम्ना व्यवह्रियमाण रथ सप्तमि पर्वदिनात् स्वरथं उत्तर दिशं प्रचालयन् उत्तरोत्तरं उत्तमोत्तम गतिं प्रदद्यात् इति काल स्वरुपं सूर्यनारायणं आराध्य सकलाभीष्टान् प्राप्स्यामः। तथैव रथ सप्तम्यां सूर्यवाहनादारभ्य रात्रिपर्यन्तं सप्तवाहनेषु सप्ताद्रीश वेङ्कट नारायणं सेवामहे। तथैव स्वाभीष्टं प्रयच्छतु इति प्रार्थयामहे।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-११

# सप्तगिरिः

## फेब्रवरि-२०२०

श्रीविकारिनामसंवत्सरस्य माघशुक्ल सप्तमि तः फाल्गुण शुक्ल षष्ठि पर्यन्तम् - १९४१



**मुखचित्रम्** – श्रीदेवी भूदेवी समेत श्रीकल्याणवेङ्कटेश्वर स्वामिनः (श्रीनिवासमंगापुरम्)

**अन्तिमरक्षापुटः** – श्री कपिलेश्वरस्वामिनः नंदिवाहनसेव (कपिलतीर्थ, तिरुपति)

**गौरवसम्पादकः-**
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

**प्रकाशकः - प्रधानसम्पादकः**
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

**सम्पादकः -** डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

**मुद्रापकः -** श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

**छायाचित्रग्रहणम्** - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**सङ्केतः**
प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते संपर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# रथसप्तमी

- डा. एन्.उमादेवी
चरवाणि - ९९५१७३४४९४

प्रतिसंवत्सरं माघमास शुक्लपक्ष सप्तम्यां रथसप्तमीव्रतं प्रवर्तते। एतद् व्रतं भविष्य पुराणे समग्रं प्रतिपादितं दृश्यते। तत्र भगवतः सूर्यस्य महिमा विशेषाः स्नान विषयाश्च सम्यक् विशदीकृताः।

श्रीकृष्णं प्रति धर्मराजः "हे केशव! रथसप्तमी दिने विधि विधानेन जपहोमतर्पणानि आचरितानां भूलोके राज्याधिकारः सम्प्राप्यते इति इत्यवदः। तादृश घटना प्रचलितावा" इत्यपृच्छत्। धर्मराज प्रश्नस्य समाधानं श्रीकृष्णः एवमुवाच । पूर्व यशोवर्ति नामकः राजा काम्भोज देशं परिपालयन्नासीत्। तस्य राज्ञः बहोः कालात् वार्धक्ये एकः पुत्रः सञ्जातः, सः निरन्तरं रोगग्रस्तः अभवत्। तस्मात् कारणात् राजा विषण्णे भूत्वा त्रिकाल वेदिनः आहूय पुत्रस्य रोग

**आदि देव नमस्तुभ्यं प्रसीद मम भास्करः।**
**दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तुते।।**
**सप्ताश्वरथ मारुढं प्रचण्डं कश्यपात्मजम्।**
**श्वेत पद्मधरं देवं तं सूर्यं प्रणमाम्यहम्।।**

विषयम् अपृच्छत् तदा त्रिकालवेदिनः एवं निजगदुः "हे राजन्! तव पुत्रः पर्वस्मिन् जन्मनि वैश्य गृहे उत्पन्नः। सः ऐश्वर्यसम्पन्नोपि कथमपि दानधर्माधिकं न चकार। तस्मात् कारणात् अस्मिन् जन्मनि रोगपीडितः अभूत्। अस्य रोग विमुक्तिः रथसप्तम्यां सूर्यदेवतायाः आराधनेनैव भवति। सूर्य पूजा करणेन तव पुत्रस्य पापनाशनं, आरोग्यं च भविष्यति।

**श्रीः आरोग्यकरः चैव धनवृद्धियशस्करः।**
**स्तवराज इति ख्यातः त्रिषु लोकेषु विश्रुतः।।**
**यः एतेन महावहो द्वे सन्ध्ये स्तिमितोदये।**
**स्तौति मां प्रणतो भूत्वा सर्व पापैः प्रमुच्यते।।**
**कायिकं वाचिकं चैव मानसं यच्च दुष्कृतम्।**
**बलिमन्त्रोऽर्घ्यमन्त्रश्च धूपमन्त्रस्तथैव च।।**
**एकजप्येन तत् सर्वं प्रणश्यति ममाग्रतः।।**
**एकजप्यश्च होमश्च सन्ध्योपासनमेव च।**
**अन्नप्रदाने स्नाने च प्रणिपाति प्रदक्षिणे।**
**पूजितोऽयं महामन्त्रः सर्वव्याधिहरः शुभः।।**
**एवं उक्तवा तु भगवानः भास्करो जगदीश्वरः।**
**आमन्त्र्य कृष्णतनयं तत्रैवान्तरधीयत।।**
**साम्बोऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनः।**
**पूतात्मा नीरुजः श्रीमान् तस्माद्रोगाद्विमुक्तवान्।।**

अतः रथसप्तमीव्रतं कारयित्वा फलं प्राप्नुवन्तु।" तदा राज्ञा पृष्टे सति ब्राह्मणश्रेष्ठः रथसप्तमीव्रतविधानं एवं

कथयामास। हे राजन्! माघमास शुक्लपक्षषष्ठ्यां एतद्व्रतमाचरणीयं, व्रतं कर्तुं उद्युक्ताः गृहस्थाः ब्राह्मीमुहूर्ते उत्थाय नद्यां सरसि व कूपे वा अर्कपत्रैः स्नानं कुर्युः। अनन्तरं इष्टदैवं आराध्य सूर्य नारायण देवालयं गत्वा धूपदीपनैवेद्यैः (षोडसोपचारैः) पूजयेयुः। ततः गृहमागत्य पञ्चयज्ञान् कृत्वा अतिथिभिः सेवकैः बालकैः पञ्चभक्ष्यैः सह भोजन समाप्तिः कार्यः। तस्मिन् दिने अभ्यंगन स्नानं न कुर्युः, तस्यां रात्रौ वेदशास्त्र पारङ्गतान् ब्राह्मणान् आहूय भगवतः सूर्य विग्रहं नियमेन सम्पूज्य सप्तमी दिने निराहारः भोगान् परित्यज्य ''हे जगन्नाथ! मया करणीयं रथसप्तमीव्रतं निर्विघ्नेन समाप्तिं प्राप्नोतु इति अभ्यर्थये इति भोजनात् पूर्वं वदन् पात्रस्थजलं विसृजेत्''। तत्रैव ब्राह्मणैः सह निद्रां कुर्युः। अनन्तर दिने ब्राह्मीमुहूर्ते उत्थाय नित्यकर्माणि आचर्य पवित्रः भवेत्। नूतनं सूर्यरथं स्वर्णेन अथवा रजतेन सम्यक् निर्माय लघु घंटाभिः दीपपंक्तिभिः रंगरंग वैभवेन सकलोपचारैः निक्षिप्य तस्य रथस्य सर्वासु दिक्षु मणि माणिक्यैः स्वर्णमय रजतमयाश्वान् सारथि च सम्यक् सज्जीकुर्युः। एवं रीत्या रथ निर्माणानन्तरं मध्याह्न काले स्नानादि परिसमाप्य धूर्तान् नास्तिकान् परित्यक्त्वा वेदपण्डितैः सौरसूक्त पारायणकरण समये गृहं गच्छेयुः। पण्डितानां स्वस्तिवाचनमन्त्रैः रथं वस्त्रमण्डपस्य मध्यभागे निक्षिपेयुः। हरिद्रा कुङ्कुमसुगन्धद्रव्यैः पुष्पैश्च पूजयेयुः। रथस्य मध्यभागे अलङ्कृत्वां सूर्यप्रतिमां सूर्यरथं सारथिं च धूप, दीप नैवेद्य, वस्त्राभरणैः सकलोपचारैः पूजयेयुः। अनन्तरं ''हे आदित्य, दिवाकर, भास्कर, प्रभाकर, मार्ताण्ड, पद्मिनीपते, ग्रहनाथ, लोकरक्षक, भूताध्यक्ष, विश्वप्रकाश, आरोग्यप्रदातः, मया आचरिते व्रते दोषान् परित्यज्य मयाकृतां पूजां दयाहृदयेन स्वीकुरु। अस्मासु तव करुणाकटाक्षवीक्षणानि प्रदर्श्य अस्माकं इष्टकाम्यादीन् सफली करोतु इति भगवन्तं सूर्यं प्रार्थयेयुः।

गृहस्थः शास्त्रोक्त प्रकारेण स्वशक्त्यनुसारं रथसप्तमी व्रतं कुर्यात्। रथेषु सारथीन् रक्तवस्त्रेण विविध वर्णैः चित्रिताभिः प्रतिमाभिः सप्तभिः अर्कपत्रैः भगवन्तं सूर्यं यथाविधि पूजयेत्। तस्यां रात्रौ जागरण पुराणपठन श्रवणादीनि कार्याणि, रथयात्रायाः आरम्भसमये सूर्यदेवं मनसि ध्यायन् दर्शयेत्। अनन्तर दिने प्रातः काले स्नानादीनि नित्यकर्माणि परिसमाप्य ब्राह्मणेभ्यः दक्षिणासहितं आतिथ्यं क्रियते चेत् सः अश्वमेधयागफलं निश्चयेन प्राप्नुयात् इति ब्राह्मणोत्तमः व्रतविधानमुक्तवान्। एवं प्रकारेण रथसप्तमीव्रतस्य आचरणकर्तुः अवश्यं राज्याधिकारं भवेत्। भगवतः आदित्यस्य अनुग्रहात् जनाः आयुरारोग्य ऐश्वर्याणि, सकल सौभाग्यानि च प्राप्नुयुः। श्रीकृष्णः उवाच - विप्रोत्तमः यशोवर्ति राज्ञः व्रतविधानमुक्त्वा स्वग्रामं प्रत्यगच्छत्। अनन्तरं राजा सूर्यदेवमाराध्य इहलोके सकलसम्पदः लब्ध्वा सुखानि अनुभूय मरणान्ते परलोके सुखं (मोक्षं) प्राप्नोत्। अनन्तरं राज पुत्रः राज्ये पट्टाभिषिक्तः धर्मेण प्रजापालनम् अकोरत्। एतां व्रतकथां भक्ति श्रद्धाभ्यां ये शृण्वन्ति तेषां जनानाम् आदित्यः वाञ्छितार्थ प्रदाता भवेत्।

**तिरुमल क्षेत्रे प्रतिसंवत्सरं माघशुद्धसप्तम्यां रथसप्तमी उत्सवं महता वैभवेन आचरन्ति। रथसप्तम्याः दिवसे सूर्योदयसमये वाहन सेवा आरभ्यते। तिरुमल क्षेत्रे आदिमवाहनं सूर्यप्रभवाहनम्। अन्यानि च लघु शेष, गरुड, हनुम, कल्पवृक्ष, सर्वभूपाल, चन्द्रप्रभ वाहनानि। मध्याह्ने वराहपुष्करिण्यां चक्रस्नानं निर्वहन्ति। रथसप्तम्यां वाहन सेवा वीक्षणेन सम्पूर्णब्रह्मोत्सवस्य वाहनानां वीक्षण फलम् उपलभ्यत इति भक्तानां दृढविश्वासः।**



# भीष्मेकादशी

- डा.माड्गुल अनिल् कुमार्, चरवाणि - ९६४०३२९५६५



पुरा श्री महाविष्णुः मुरः नाम राक्षसं जघान। तदा विष्णोः पवित्रदेहात् काचन देवता समुत्पन्ना। भगवान् तां का त्वमिति पप्रच्छ। सा तु अहं ''एकादशी'' इत्युवाच। तेन सन्तुष्टः विष्णुः अद्यारभ्य भवत्याः नाम्नि एकादश्यां ये मम पूजां करिष्यन्ति ते मोक्षार्हाः भविष्यन्ति इति वरमदात्। तदारभ्य सर्वे एकादशी व्रतमाचरन्ति। एवं एकस्मिन् वर्षे चतुर्विंशति एकादश्यः आगम्यन्ते। तासु भीष्मेकादशी अन्यतमा।

अष्टवसुषु प्रभासो नाम वसुः वसिष्टस्य शापवशात् देवव्रत नाम्ना भूमावजीजनयत्। सः गङ्गाशन्तन्वोः पुत्रः। अतः शान्तनवः, गाङ्गेयः इत्यपि च प्रसिद्धिमवाप। एकदा अटव्यामटन् शन्तनुः दाशराजपुत्र्यां सत्यवत्यामनुरक्तोऽभवत्। तां शन्तनवे दातुं दाशराजः एकां परिस्थितिं निर्धारितवान् यत् सत्यवत्याः पुत्रस्य एव राज्याधिकारः दातव्य इति। अनेन शन्तनुः खिन्नः अभवत्। पितुः खिन्नताकारणं ज्ञात्वा सत्यवत्याः पुत्राय एव राज्याधिकारं दातुं पित्रे वचनमदत् भीष्मः। तदनु दाशराजे विश्वासम् उत्पादयितुम् ''अहम् आजन्म ब्रह्मचर्यम् अवलम्बयामि'' इति प्रतिज्ञामकरोत्। अनेन अस्य नाम भीष्म इति प्रसिद्धिमवाप। स्वकुमारस्य त्यागनिरतिं दृष्ट्वा अत्यन्तसन्तुष्टः शन्तनुः भीष्माय स्वच्छन्दमरणं प्राप्तुं वरमदात्।

भारतसङ्ग्रामसमये भीष्मः शिखण्डिनं दृष्ट्वा अस्त्रसन्यासमकरोत्। तदनन्तरं शरशय्यामधिजगाम। एतदनन्तरं कदाचित् श्रीकृष्णः पाण्डवान् प्रति सल्लापं कुर्वन् तन्मध्ये तूष्णीमभवत्। तद्दृष्ट्वा पाण्डवाः कृष्णं तत्कारणमपृच्छन्। तदा कृष्णः -

''शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः॥''

इत्यवोचत्। भक्तेषु पक्षपाती भगवानिति अनेन ज्ञायते। श्रीकृष्णः- ''हे पाण्डवाः! भीष्मपितामहः धर्मशास्त्रज्ञेष्वग्रगण्यः। समस्तशास्त्रानधिगतवान्। मानवानां तरणोपायान् सुस्पष्टं जानाति सः। धर्मसंशयान् सप्रामाणं दूरीकर्तुं योग्यो महनीयः एक एव सः। अतः सूक्ष्मविषयान् ज्ञातुं तत्र गमिष्यामः, आगच्छन्तु'' इति वदन् पाण्डवान् शरतल्पगतस्य भीष्मस्य सकाशमनयत्।

तदा भीष्मस्य देहे सर्वत्र अनेके बाणाः, व्रणाश्च आसन्। क्रमक्रमं शक्तिर्विहीनश्च बभूव। माघमासे आतपः अधिक एव। भीष्मः स्वच्छन्दमरणं प्राप्तुं शक्तः। तथापि उत्तरायणपुण्यकालपर्यन्तं स्थातुं सार्धमासादारभ्यः कालं यापयति। भगवन्तं स्मरन् एकादश्यामेव निष्क्रमणं कर्तुं निश्चितवान्। शरतल्पगतं भीष्मं दृष्ट्वा निर्जराः अपि दुःखिताः अभवन्। शवानां मध्ये, क्षतगात्राणामार्तनादान् शृण्वन् अष्टपञ्चाशत् दिनपर्यन्तं भीष्मः उत्तरायणपुण्यकाले मरणाय निरीक्षयत्।

यः समराङ्गणे आयुधान् न स्पृशामि इति प्रतिज्ञामकरोत् स एव कुरुक्षेत्र सङ्ग्रामे भीष्मं सुदर्शन चक्रेण हन्तुमुद्यत। एवं भगवतः कृष्णस्यैव प्रतिज्ञां भङ्गं कर्तुं शक्तः पराक्रमशाली भीष्माचार्यः।

माघशुक्ल सप्तमी रथसप्तमी। तदनन्तर तिथिरेव भीष्माष्टमी। अस्मिन् दिने भीष्मस्य निर्याणमभवत्। अतः भीष्माष्टमीति च कथ्यते। कार्तीक शुक्ल एकादश्यां शरतल्पगतः भीष्मः माघशुक्ल अष्टम्यां उत्तरायणपुण्यकाले शरीरं तत्याज। अतः तस्य निर्याणकाले सर्वे भीष्मतर्पणं समाचरन्ति। भीष्मश्राद्धं कृत्वा तिलातर्पणाचरणेन सन्तानप्राप्तिर्जायते इति अस्माकं पुराण कथनम्।

श्रीमन्महाभारते अनेके उपदेशाश्च विद्यन्ते। तेषु गीतोपदेशः, धृतराष्ट्रं प्रति विदुरोपदेशः, धर्मराजं प्रति भीष्मोपदेशश्च अत्यन्तप्रसिद्धाः। यथा भगवद्गीतायाः प्राशस्त्यं भवति तथा भीष्मोपदेशश्चापि प्रसिद्धिर्भवति। धर्मराजस्य सन्देह निवारण समये भगवन्तं श्रीकृष्णं प्रदर्श्य -

''जगत्प्रभुं देवदेव मनन्तं पुरुषोत्तमम्।
स्तुवन्नाम सहस्रेण पुरुषः सततोत्थितः॥
त्वमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्।
ध्यायन् स्तुवन्नमस्यन् च यजमानस्तमेव च॥
अनादि निधनं विष्णुं सर्वलोक महेश्वरम्।
लोकाध्यक्षं स्तुवन्नित्यं सर्व दुःखातिगो भवेत्॥''१०-१२

इत्यारभ्य श्री विष्णोर्दिव्य सहस्र नामस्तोत्रमुपदिदेश।

माघशुक्ल एकादशी भीष्मेकादशी इत्युच्यते। अयमेव श्री विष्णोर्दिव्य सहस्र नामस्तोत्र जयन्ती दिवसः अपि। भीष्मपितामहस्य भक्तिपारवश्यं दृष्ट्वा भीष्मस्य गौरवार्थं भीष्मेकादशीं समाचरेदिति भगवान् श्रीकृष्ण परंब्रह्मा आदिदेश। तदनु अस्माकं देशे भक्त्या भीष्मेकादशीं निर्वहन्ति।



# भारतसंस्कृतेः महत्त्वम्

- डा.अजयकुमारनन्दः चरवाणि - ९१८२३४१०५२

सर्वे जानन्ति यत् - भारतदेशः अयं सांस्कृतिकः देशः भवति। अस्मिन् देशे नानासंस्कृतिः परिलक्ष्यते।

तत्रादौ अहं भारतदेशतत्ससंस्कृतिविषये किञ्चिदालोचयामि - तत्र मनुस्मृतौ तृतीयाध्याये मनुः कथयति यत् - यस्मिन् देशे चरित्रगठनं क्रियते तथा अन्यान् देशान् चरित्रगठनविषये शिक्षयन्ति, सर्वे च मानवाः एतां संस्कृतिम् अनुसरन्ति, सः एव देशः भवति भारतदेशः यथा -

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्याः सर्वमानवाः।।** (मनुः-३-३३)

भारतदेशे ये जन्मग्रहणं कुर्वन्ति ते वस्तुतः धन्याः भवन्ति, पुण्यमर्जयन्ति, पुण्यवन्तश्च भवन्ति। अस्मादुच्यते स्कन्दपुराणे-
**दुर्लभं भारते जन्म।।** ( स्कन्दपुराणम्)

भारतदेशे यानि स्थलानि सन्ति तेषु सर्वेषु देशेषु उत्कलदेशः श्रेष्ठः भवति किमर्थमित्युक्ते अस्य देशस्य या संस्कृतिः भवति सा संस्कृति सर्वासु संस्कृतिसु भिन्ना नवविना च भवति। अस्मादुच्यते कपिलपुराणे -

**देशेषु भारतश्रेष्ठः तत्र च उत्कलः (लाः) स्मृतः (स्मृतानः)।**
**उत्कलेन समो देशः देशः नास्ति महीतले।।** (कपिलपुराणम्)

भारतदेशे द्वादशमासेषु त्रयोदशपर्वाणि पालयन्ति। इदमेव मुख्यप्रयोजनं भवति अस्माकं भारतस्य तथा भारतवासिनां च अतः स्कन्दपुराणे वैष्णवखण्डे, पद्मपुराणे स्वर्गखण्डे अष्टादशोत्सवानां वर्णना दृश्यते। किन्तु अत्र केवलं ढोलोत्सवः रथोत्सवः धनुसंक्रान्तूत्सवाः उक्ताः सन्ति।

**दोलायां दोलगोविन्दः चापे तु मधुसूदनः।**
**रथे तु वामनं दृष्ट्वा पुनर्जन्म न विद्यते।**
(स्कन्दपुराणम्, नीलाद्रिविजयम्)

भारतस्य या संस्कृतिः अस्ति। सा च संस्कृतिः वैदिकीसंस्कृतिः भवति। सा एव आद्या संस्कृतिः, पवित्रा संस्कृतिश्च भवति इति यजुर्वेदे उक्ता अस्ति -
**सा संस्कृतिः विश्ववारा।** (यजुर्वेदः)

भारतीयसंस्कृतिः सर्वेषां विश्वस्थानां जनानां मङ्गलमिच्छति कस्यापि जनस्य अमङ्गलं नेच्छति सर्वेषां कल्याणमस्तु इति चिन्तयति। सर्वेषां निरोगकामनां करोति, भद्रवस्तु द्रष्टुं प्रेरयति अस्मादुच्यते -

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा काश्चद्दुखभाग्भवेत्।।**

भारतीयसंस्कृतिः इयं सर्वान् साम्यभावस्य शिक्षां ददाति।
**सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।**
**देवाः भागं यथा पूर्वे सं जानानामुपासते।।** (यजुर्वेदः)

भारतीयसंस्कृति इयं सर्वान विश्वस्थजनान् निजपरिवारः इति चिन्तयति। उच्चनीचभेदभावं नैव कस्यापि कृते प्रदर्शयति। उदारभावम् अभिव्यनक्ति। समग्रां पृथिवीं निजपरिवारः इति भावयति। अतः उच्यते कथासरित्सागरे सोमोदेवेन -

**अयं निजपरो वेत्ति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्।।** (कथासरित्सागरः)

समग्रेयं वसुधा एकं नीडसदृशं भवति। एतस्मिन् वसुधारूपीनीडे वयं सर्वे मानवाः पक्षीरूपेण वासं कूर्मः अस्मादुद्यते यजुर्वेदे-
**विश्वमेकः नीडः।।** (यजुर्वेदः)

भारतदेशस्य संस्कृतिः सर्वान् जनान् सम्मानं प्रददाति आदरयति मातापितागुरुन् गौरवं प्रयच्छति। अस्मात्कथ्यते तैतरीयोपनिषदि -

**मातृ देवो भव, पितृ देवो भव**
**आचार्यः देवो भव अतिथि देवो भव।।** (तैतरीयोपनिषद्)

अस्माकं भारतीयानां या संस्कृतिः अस्ति सा संस्कृतिः संस्कृतभाषाश्रिता विद्यते। अतः कश्चित्सहृदयः उक्तवान् -
**संस्कृतं संस्कृत्याश्रिता।।**

यावत्कालपर्यन्तम् अयं भारतदेशः स्यात्। भारतदेशस्य संस्कृतिः स्यात्। तावत्कालपर्यन्तमस्माकं रामायणकथा सर्वदा सर्वत्र सर्वेषु प्रचारिता भवेत्। अतः रामायणे कथितमस्ति -

**यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।**
**तावद्रामायणी कथा लोकेषु प्रचरिष्यति।।** (रामायणम्)

अस्माकं भारतवर्षे तथा भारतीयसंस्कृतौ च यन्नास्ति तत्तु विश्वे केष्वपि देशेषु, कस्यामपि संस्कृतौ न स्यात्। अस्मात् कथ्यते महाभारते व्यासदेवेन -

**यन्नेहास्ति तदन्यत्र यन्न ह्यस्ति।**
**न तत्क्वचित्।।** (महाभारतम्)

अस्माकं भारतीयानां मुख्यधर्मग्रन्थः भवति वेदः। वेदः साक्षात् भूमिं मातारूपेण कथयति तथा पृथिवीं पुत्रत्वेन अङ्गीकरोति। पृथिव्यामस्यां विद्यमानान् सर्वान् जनान् पुत्ररूपेण स्वीकरोति इति वक्तुं शक्यते। अतः उच्यते अथर्ववेदे -

**माता भूमिः पुत्रोऽहं पृथिव्याः।।** (अथर्ववेदः)

अस्माकं या संस्कृतिः भवति सा संस्कृति सर्वदा सत्यं वक्तुमुपदिशति। अतः उच्यते तैतरीयोपनिषद् -

**सत्यं वद, धर्मं चर,**
**स्वाध्यायान्न प्रमदितव्यम्।।** (तैतरीयोपनिषद्)

भारतदेशः तथा तद्देशस्य या संस्कृति अस्ति। सा संस्कृति अस्मान् कदापि सुखमयं जीवनं यापयितुं नैव वदति अपि तु त्यागमयजीवनं यापयितुमादिशति। असमाद्भण्यते ईशावास्योपनिषदि -

**ईशावास्यमिदं सर्व यत्किञ्चिज्जगत्यां जगत्।**
**तेन त्यक्तेन भूञ्जिथाः मा गृधः कस्य स्विद्धनम्।।**
(ईशावास्योपनिषद्)

शरीरं नश्वरं भवति। आत्मा एकः एव चिरस्थायी भवति। यथा वस्त्रं चीरा भवति चेद्वयं तद्वस्त्रं परिवर्त्तयामः। तथैव आत्मा अयं सर्वदा एकस्मात् शरीरात् अन्यशरीरं प्रति गच्छति। अस्मात् निगद्यते भगवद्गीतायाम् -

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोपराणि।**
**तथा शरीराणि विहाय जीर्णा न्यन्यानि संयाति नवानि देही।।**
(गीता -२)

भारतदेशे नानाधर्माः नानाशास्त्राणि, नानाधर्मावलम्बिनः जनाः नानासंस्कृतयः भवन्ति किन्तु तेषां लक्ष्यस्तु सर्वेषाम् एकः एव भवति मोक्षः प्राप्तिः - अतः उच्यते बृहदारण्यकोपनिषदि

**असतो मा सद्गमय तमसो मा ज्योतिर्गमय।**
**मृत्युर्मा अमृतङ्गमय।** (बृहदारण्यकोपनिषद्)

अत्र देशे सर्वे धर्मायत्नं कुर्वन्ति। न तु धनाय। अस्मात्कारणादुच्यते हितोपदेशे -

**धनानि भूमौ पशवश्च गोष्ठौ**
**नारीगृहद्वारे जनाः श्मशाने।**
**देहश्चितायां परलोकमार्गे**
**धर्मानुगो गच्छति जीव एकः।।** (हितोपदेश)

अत्र सर्वे कर्मणि विश्वसन्ति। अतः कर्मवादिनः भारतीयाः भवन्ति। न तु फलवादीनः फलेच्छां त्यक्त्वा कार्यं कूर्यात् इति अस्माकं संस्कृत्याश्रित्यशास्त्रमस्मान् उपदिशति। यथोक्तं भगवद्गीतायाम् -

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।।** (गीता-२)

भारतदेशः शान्तिप्रियदेशः भवति। सर्वे सर्वदा शान्तिमिच्छन्ति यथा उक्तम् ऋग्वेदे शान्तिसूक्ते -

**द्यौ शान्तिरन्तरीक्षं शान्तिः पृथिवी शान्तिरापः शान्तिः**
**औषधयः शान्तिः वनस्पतयः शान्तिः ब्रह्मशान्तिः,**
**सर्वं शान्तिः सा मा शान्तिरेधि।।** ( ऋग्वेदः)

अत्र बौद्ध-जैन-महम्मदीय-हिन्दूरित्यादयः धर्माः सन्ति। सर्वे आनन्देन सहितं वासं कुर्वन्ति निजनिजपरम्परां पालयन्ति। उत्सवान् आयोजयन्ति। कस्यापि कृते कापि वाधा नास्ति। किमर्थमित्युक्ते यद्यपि तेषां देवानां नामानि भिन्नानि भिन्नानि सन्ति किन्तु ते केवलम् एकमेव देवं सर्वे उपासनां कुर्वन्ति। तत्परब्रह्म भवति अस्मात् साम्यश्लोके उच्यते -

**यं शैवा समुपासते शिव इति ब्रह्मेति वेदान्तिनः**
**सोऽयं वो विदधातु वाञ्छितफलं त्रलौक्यनायो हरिः।।**
**एकसद्विप्राः बहुदा वदन्ति इन्द्रं यमं मातरिश्वानमाहुः।**

अत्र सर्वान् मातापितृन् देवत्वेन अङ्गीकुर्वन्ति अतः कथ्यते -

**त्वमेव माता च पिता त्वमेव**
**त्वमेव बन्धुश्चसखा त्वमेव।**
**त्वमेव विद्या द्रविणं त्वमेव**
**त्वमेव सर्वं मम देवदेव।।**

भारतीयसंस्कृतौ नमस्कारस्य महत्वपूर्णस्थानं वर्त्तते। नमस्कारः कोऽपि अन्यस्मै किमर्थं करोति तत्र कारणं विद्यते यत् सर्वे च नमस्काराः कृष्णं प्रति गच्छन्ति। न तु अन्यस्मे कस्मैचित् इतिकृत्वा महाभारते उच्यते -

**आकाशात्पतितं तोयं समुद्रं प्रतिगच्छति।**
**सर्वः एव नमस्काराः केशवं प्रतिगच्छति।।** (महाभारतम्)

भारतीयसंस्कृतिः सर्वासां नारीणां कृते सम्मानं सर्वे प्रयच्छन्ति, सत्कारयन्ति। अतः मनुः कथयति मनुस्मृतौ -

**यत्र नार्यस्तु पूज्यन्ते।**
**रमन्ते तत्र देवताः।।** (मनुस्मृतिः)

अत्र देशे नानाभाषाभाषिणः जनाः नानावेषिणः जनाः तिष्ठन्ति। किन्तु ते सर्वे हृदयेषु भारतीयाः इति वदन्ति। भारतमातुः क्रोडे तिष्ठन्ति। तदन्नं खादन्ति तस्मात् यद्यपि भिन्नभिन्नस्थानेषु भवन्ति। तथापि गर्वेण साकं वदन्ति यत् - वयं भारतीयाः इति। एतादृशपरम्परायुक्तः भवति अयं भारतदेशः। अतः तस्याः संस्कृतिः अपि महनीया भवति इति कथनेन नातिशयोक्तिः भजते।



## वैकुंठ एकादशि सन्दर्भे (२०२० जनवरि ०६)
## तिरुमल श्री वेङ्कटेश्वरस्वामिनः आलये अलङ्करणं, स्वर्णरथोत्सव दृश्यानि

आलये अलङ्करणम्

स्वर्णरथोत्सवः



श्रीस्वामिनः भक्तानां वैकुंठ एकादशी शुभाकाङ्क्षाः प्रकटयन् ति.ति.दे. पालकमंडलि अध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः



स्वामिपुष्करिण्यां चक्रस्नानम्



# सूर्याष्टोत्तर शतनामावळीः

ॐ अरुणाय नमः
ॐ शरण्याय नमः
ॐ करुणारससिन्धवे नमः
ॐ असमानबलाय नमः
ॐ आर्तरक्षकाय नमः
ॐ आदित्याय नमः
ॐ आदिभूताय नमः
ॐ अखिलागमवेदिने नमः
ॐ अच्युताय नमः
ॐ अखिलज्ञाय नमः १०
ॐ अनन्ताय नमः
ॐ इनाय नमः
ॐ विश्वरूपाय नमः
ॐ इज्याय नमः
ॐ इन्द्राय नमः
ॐ भानवे नमः
ॐ इन्दिरामन्दिराप्ताय नमः
ॐ वन्दनीयाय नमः
ॐ ईशाय नमः
ॐ सुप्रसन्नाय नमः २०
ॐ सुशीलाय नमः
ॐ सुवर्चसे नमः
ॐ वसुप्रदाय नमः
ॐ वसवे नमः
ॐ वासुदेवाय नमः
ॐ उज्ज्वलाय नमः
ॐ उग्ररूपाय नमः
ॐ ऊर्ध्वगाय नमः
ॐ विवस्वते नमः
ॐ उद्यत्किरणजालाय नमः ३०
ॐ हृषीकेशाय नमः
ॐ ऊर्जस्वलाय नमः
ॐ वीराय नमः
ॐ निर्जराय नमः
ॐ जयाय नमः
ॐ ऊरुद्वयाभाव-
रूपयुक्तसारथये नमः

ॐ ऋषिवन्द्याय नमः
ॐ रुग्घन्त्रे नमः
ॐ ऋक्षचक्रचराय नमः
ॐ ऋजुस्वभावचित्ताय नमः ४०
ॐ नित्यस्तुत्याय नमः
ॐ ऋकारमातृकावर्ण
रूपाय नमः
ॐ उज्ज्वलतेजसे नमः
ॐ ऋक्षाधिनाथमित्राय नमः
ॐ पुष्कराक्षाय नमः
ॐ लुप्तदन्ताय नमः
ॐ शान्ताय नमः
ॐ कान्तिदाय नमः
ॐ घनाय नमः
ॐ कनत्कनकभूषाय नमः ५०
ॐ खद्योताय नमः
ॐ लूनिताखिलदैत्याय नमः
ॐ सत्यानन्दस्वरूपिणे नमः।
ॐ अपवर्गप्रदाय नमः
ॐ आर्तशरण्याय नमः
ॐ एकाकिने नमः
ॐ भगवते नमः
ॐ सृष्टिस्थित्यन्तकारिणे नमः
ॐ गुणात्मने नमः
ॐ घृणिभृते नमः ६०
ॐ बृहते नमः
ॐ ब्रह्मणे नमः
ॐ ऐश्वर्यदाय नमः
ॐ शर्वाय नमः
ॐ हरिदश्वाय नमः
ॐ शौरये नमः
ॐ दशदिक्सम्प्रकाशाय नमः
ॐ भक्तवश्याय नमः
ॐ ओजस्कराय नमः
ॐ जयिने नमः ७०
ॐ जगदानन्दहेतवे नमः
ॐ जन्ममृत्युजराव्याधिवर्जिताय नमः
ॐ उच्चस्थान समारूढरथस्थाय नमः
ॐ असुरारये नमः
ॐ कमनीयकराय नमः
ॐ अब्जवल्लभाय नमः
ॐ अन्तर्बहिःप्रकाशाय नमः
ॐ अचिन्त्याय नमः
ॐ आत्मरूपिणे नमः
ॐ अच्युताय नमः ८०
ॐ अमरेशाय नमः
ॐ परस्मैज्योतिषे नमः
ॐ अहस्कराय नमः
ॐ रवये नमः
ॐ हरये नमः
ॐ परमात्मने नमः
ॐ तरुणाय नमः
ॐ वरेण्याय नमः
ॐ ग्रहाणांपतये नमः
ॐ भास्कराय नमः ९०
ॐ आदिमध्यान्तरहिताय नमः
ॐ सौख्यप्रदाय नमः
ॐ सकलजगतांपतये नमः
ॐ सूर्याय नमः
ॐ कवये नमः
ॐ नारायणाय नमः
ॐ परेशाय नमः
ॐ तेजोरूपाय नमः
ॐ हिरण्यगर्भाय नमः
ॐ संपत्कराय नमः १००
ॐ ऐं इष्टार्थदाय नमः
ॐ अनुप्रसन्नाय नमः
ॐ श्रीमते नमः
ॐ श्रेयसे नमः
ॐ भक्तकोटिसौख्यप्रदायिने नमः
ॐ निखिलागमवेद्याय नमः
ॐ नित्यानंदाय नमः
ॐ छायाउषादेवी समेत -
श्री सूर्यनारायण स्वमीने नमः


तिरुमल श्री वेङ्कटेश्वर स्वामिनः आलये (२५ दिनानि) प्रचलिताध्ययनोत्सव दृश्यानि।



तिरुमल श्री वेङ्कटेश्वरस्वामिनः आलये वैकुंठ एकादशि सन्दर्भे
ति.ति.देवस्थानेन निर्वहित कोयिल् आळवार् तिरुमंजनम् (आलयशुद्धिः) कार्यक्रम दृश्यानि



तिरुपति श्री पद्मावती विद्यालयेषु महिलाः उद्दिश्य उत्तम समाज निर्माणाय महिलानां
विद्या आवश्यकमिति प्रोक्ता ति.ति.दे. धर्मकर्तल मंडलि सभ्या डा. सुधानारायणमूर्तिः


डिसेंबर् मासे तिरुमल कुमाराधार, पसुपुधार डाम्योः समीपे गङ्गपूजां आचरन् ति.ति.दे. कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् ऐ.ए.एस्.



# दैवीगुणैः दुःखराहित्यम्

तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः टि.वी.बालहनुमान्
चरवाणि - ९५७३१३५४२८

मानवः तस्य सहजस्थित्या आनन्दमयः। स्नेहेन स्थित्वा प्रेमायाः निर्वपणमेव तस्य सहजस्वभावः। यदाः सः आत्मानं वेत्ति तदैव सः विषयममुं साधयितुम् शक्नोति। परन्तु सामान्यरीत्या यदि पश्यामः नवति प्रतिशतम् जनाः येन केनापि कारणेन शोकमग्नाः दृश्यन्ते। दुःखोऽयं कदाचित् स्वयं अथवा कलानुगुणं प्राप्यते। तस्मात् ते सर्वदा दुःखमग्नाः दृश्यन्ते। कुरुक्षेत्रेऽपि अर्जुनः दुःखं स्वयं आनीतवान्। कुतः इति चेत् तस्य युद्धः स्वबान्धवैरेव भविष्यतीति चतुर्दश वर्षेभ्यः जानाति। तर्हि युद्धरंगं प्रति आगत्य दुःखस्यानुभवः कुतः? तदर्थं दुःखराहित्याय भगवद्गीता उत्तममार्गान् उपनिबद्धा। तेषु एकः दैवीगुणानां सम्पादनम्। ये दैवीगुणान् सम्पादयन्ति तेषां आत्मशक्तिः जागृता भवति। यदि आत्मशक्तिर्जागृता भवति तदा मनुष्यस्य गतिः उत्तमा भवति। सः समस्तविजयैः अग्रेसरति। तर्हि दैवीगुणाः के? कार्पण्यभावराहित्यम् आध्यात्मिकज्ञानपादनम् आत्मनिग्रहेण जीवनयापनं यजनक्रिया वेदाध्ययनम् अहिंसा सत्यभाषणं क्रोधा भावः त्यागः शान्तिः परदोषवर्जनं भूतदया लोभराहित्यं तेषः क्षमा धृतिश्च। एते गुणाः दैवीगुणाः इति गीतायां षोडशाध्याये प्रतिपादिताः तेषु दैवीगुणेषु प्रथमं भयराहित्यं नाम निर्भयत्वम्। अस्मिन् जगति ये मानसिकस्थितौ वसन्ति ते भयेन जीवन्ति परन्तु ये आत्मस्थितौ वसन्ति ते प्रेम्ना जीवन्ति। साधितमहाद्भुतानां मानवानां जीवने सुस्पष्टं निर्भयत्वं दृश्यते। नाम तेषु दैवीगुणाः विद्यत एव। दैवीगुणस्य विद्यमानत्वात् एव ते दुःखराहित्यं प्राप्तवन्तः। स्वतत्रभारतकारकः गान्धी एव स्यात् प्रप्रथमं चन्द्रमण्डले पादनिक्षेपकः नील् आर्मष्ट्रँग् एव स्यात् सर्वप्रथमम् एवरेष्ट् पर्वताधिरोहकः एडमंड् हिल्लरी एव स्यात् अथवा अन्यः कोऽपि पराक्रमवानेव स्यात् सर्वेष्वपि एषु निर्भयत्वं संदृश्यते। ततः सर्वे युवानः निर्भयतां धारयेयुः। पराजितापहास्यनष्ट भावनाभिस्सह जीवनमेव भयः। ''मनुष्यः प्रप्रथमं स्वान्तःकरणं जयेत् न तु बाह्यम्'' इति चाणक्येन प्रोक्तम्। युद्धार्थं प्रस्थितः योद्धा परीक्षार्थं प्रस्थितः विद्यार्थी वा भवतु सर्वेषां जयापजयनि र्धारणं प्रागेव भवति। तन्निर्धारणं तेषां अन्तः करणेष्वेव भवति। ''ममावश्यं जयमेव'' इति विचिन्त्य प्रस्थितस्य मनुष्यस्य अवश्यं जयमेव। अत एव हेन्री फोर्ड महोदयेनोक्तं ''साधयितुम् शक्नोम्यहम्'' अथवा '' न शक्नोमि साधयितुमहम्'' इति चिन्तनद्वयमपि सत्यमेव। अर्थात् जयापयाः भवद्भिरेव निर्णीयते। भगवद्गीता माध्यमेन यदि दैवीगुणान् प्राप्नोति तर्हि विजयः सिध्यति। तदभावात् भये निमग्नस्सन् पराजयते। एवं भगवद्गीतास्थ षोडशोध्याय श्लोकाध्ययनेन दैवीगुणान् सम्प्राप्य दुःखराहित्येन विजयप थे जेगीयमानाः भविष्यन्ति।



# वराहावतारः

- डा.स्वर्णसाम्बशिवरावः

चरवाणी - ९९८९४९१६००

प्रजापतिषु कश्यपप्रजापतिः एकः। तस्य चत्वाराः पत्न्यः आसन्। दिति, अदिति, विनता, कद्रुवेति। तासु अदित्याः देवाः, दित्याः राक्षसाः, विनतायाः ननूरुः, गरुत्मन्तादि पक्षिगणाः, कद्रुवायाः नन्त, तक्षककर्कोटिकादि सर्पवीराः जनिताः। दिति पुत्राः दैत्याः। तस्याः हिरण्याक्ष, हिरण्यकशिपुः इति द्वौ राक्षसौ जातौ। तयोः कनिष्टः हिरण्याक्षः हिमगिरिं गत्वा वायुबन्धनं कृत्वा ब्रह्माणं प्रति अति तीव्र तपमाचर। तस्य घोर तपसात् ब्रह्माण्डं समस्तं कम्पितम्। देवगणाः भयं प्राप्ताः। पृथिव्यपि कम्पिता। समस्तदिशः उष्णकारणेन उष्णवायवः व्याप्ताः। स्वर्गलोक देवताः महाभीत्या तेषां राज्याः गृहाश्च सिंहासनाः अपि न वसन्तीति भीत्या तापं प्राप्ताः। तदा ते सर्वे सत्यलोके ब्रह्मं गत्वा, प्रार्थयामास तं ब्रह्ममेवं ''हे ब्रह्मदेव! त्वं सर्ववेदसारसम्पन्नः, सृष्टिकर्ता त्वमेव। त्वं सर्वं जानाति। अस्माकं स्थावरेषु निवासयोग्यः न दृश्यते। एतेन राक्षसस्य तपसा उत्पन्नानि कष्टफलितानि वयं न भरेयुः। अतः त्वं तस्य राक्षसस्य तपसां अवरोधं कृत्वा शान्तिः परिरक्षयतु'' इति ते ब्रह्मं प्रार्थयामास। तदा ब्रह्मन् तान् एवमब्रवीत्'' देवाः युष्माकं भयं नास्ति। इदानीमेव तत्र गत्वा तस्य वरान् दत्वा तपं निषिद्धं करोमि। अहं युष्माकं रक्षणं करोमि। चिन्ता मास्तु। एवमुक्त्वा विधाता हिरण्याक्षस्य समीपं गतवान्।

तदा स राक्षसः उत्तिष्ठः ब्रह्म देवस्य साष्टाङ्गप्रमाणं कृत्वा ''पितामहा! तव दर्शनाय अनेकवर्ष पर्यन्तम् निरीक्षणम् कृतवानहम्। तदा ब्रह्मन् वदति'' हे भक्ता तव घोरतपसा तृप्तोऽस्मि। तव वांछाः किम्। पृच्छतु। अवश्यमहं ददामिते। प्रणामाः। मम कस्मादपि मानवेभ्यः, आयुधेभ्यः वा, मन्त्र, तन्त्र, अस्त्र, शस्त्रादयेभ्यः वा मरणं न भवतु। इदं मम प्रथमं वरम्। द्वितीयवरं श्रुणोतु- ''अस्मिन् लोके त्रिलोकाधिपत्यं ददातु मे। तदा विधाता नारायणं स्मर्त्वा राक्षसाय वरान् दत्वा सत्यलोकं गतवान्।

हिरण्याक्षः देवतान्, गन्धर्वान्, यक्षान् जित्वा अनन्तरं दिक्पालकान् तस्याधीने स्थापितवान्। अनन्तरं सर्वलोकाधिपत्याय सत्यलोकं गतवान् तदा विधाता तं वदति ''कुमार! अहं वृद्धः शक्तिहीनः खलु! इदानीं श्रीनारायणः त्रिलोकाधिपतं। त्वं तं जित्वा लोकाधिप्तयं साधय'' इति। तदा हिरण्याक्षः वैकुण्ठं गतवान् हरिं



जेतुम्। वैकुण्ठे द्वारपालकौ स्तः। राक्षसः पृच्छति तैः युष्माकमधिपतिः कुत्र रे? वदन्तु।'' तदा पालकौ वदतः ''राजा इदं श्रीहरि निवासः वैकुण्ठः नारायणः अन्तः नास्ति। सः पाताललोकं गतवान्। त्वं अन्तः गत्वा पश्यतु वयं अवरोधं न कल्पयामः''। तदा हिरण्याक्षः अन्तः गत्वा वैकुण्ठे सर्वं दृष्ट्वा अपि सः वैकुण्ठे नारायणं न दृष्टः। पुनः बहिरागत्य पृच्छति ''रे कुत्रास्ति युष्माकमधिपतिः। तौ वदतः ''राजा नारायणः वैकुण्ठे नास्ति। श्रीहरिः पाताललोकं गतवान्''। हिरण्याक्षः पृच्छति तौ रे पातललोकस्य मार्गः कथम्। तदा तौ वदति ''राजा! अयं पृथिवीं अवगम्य गच्छतु'' हिरण्याक्षः पाताललोकं गन्तुं पृथिवी मार्गमध्ये अन्तरायं कल्पयति। तदा स हिरण्याक्षः पृथिव्याः अवरोधं निवारणाय पृथिवीं कटः इव परिवेष्टनायारम्भः। तदा तस्य चिन्तनं ज्ञात्वा पृथिवी, पातालवासयः हरिं प्रार्थयामास। विश्वरूप! दै त्ये न ा ह सर्वजीवाः गिरजयः।

भयकम्पिताः त्वमेवशरणं पाहिमां देव। इति भूदेवी नारायणं प्रार्थयामास तदा श्री हरिः पृथ्वि चिन्तामास्तु तव तं राक्षसं मारयित्वा। रक्षयामि सर्वजीवान् नदीपर्वतानोषधीन्।

अनन्तरं नारायणः वराहरूपं धारितवान्। वराहावतार विष्णुः षट् सहस्रयोजनोछैः, त्रिसहस्रयोजन विशालेन, नवसहस्रयोजन विस्तीर्णेन शूकरमुरवे द्वाशयां दीर्घदन्ताभ्यां चतुर्भुजेषु, शङ्खचक्रगदखङ्गैः चन्द्रः इव प्रकाशति। ततो वराहस्वामिस्तु भयंकर गर्जनेन। बलेन दीर्घदन्तेन ग्रीवछादनं कृतवान्।

तदा तेन घातेन हिरण्याक्षस्य वक्षः भित्वा रक्तस्राव: जलि पतितः। नारायणः स्वस्य पादेन राक्षसशरीरं पीडयित्वा तस्य दीर्घदन्तेन तं त्वक्छेदनं कृत्वा मारितवान्। तदा सः वराहरूपः नारायणः कटेरकेन मण्डलीकृतां पृथिवीं स्वदीर्घदन्तयोः उपरि निक्षिप्य क्रमेण मण्डलीं विस्तरणं कृत्वा सर्वान् जीवान् रक्षयित्वा वराहावतारं विसृज्य नारायणः वैकुण्ठं गतवान्।

**फलश्रुतिः** यथा चमत्यमनादवैदन शोधार्यते घृतम्।
एव सर्वेषु शास्त्रेषु वाराहं घृति सम्मितम्।।



# 'सप्तगिरि' ग्राहकेभ्यः सूचनाः

**सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।**

**१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च** sapthagiri.helpdesk@tirumala.org **द्वारा सूचयितुं शक्नुवन्ति।**

**२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।**

**३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा** sapthagiri.helpdesk@tirumala.org **द्वारा वा सूचयन्तु।**

**४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!**



# रामकृष्णतीर्थ माहात्म्यम्

- रोम्पिचर्ल यश्वन्त दीक्षितः
चरवाणिः - ९४९४५३८५०९

**कमप्यनवधिंवन्दे करुणावरुणालयम्।**
**वृषशैल तटस्थानां स्वयंव्यक्तिमुपागतम्।।**

अस्माकं भारत भूमिः कर्मभूमिः अस्यां भूमौ नैकानिपुण्य क्षेत्राणि विद्यन्ते, तेषु कलियुगप्रत्यक्ष विबुधस्य वेङ्कटाचल क्षेत्रं अन्यतमं भवति। अस्य क्षेत्रस्य आदिवराहक्षेत्रमित्यपि कथ्यन्ते। अस्मिन् क्षेत्रे शंख, चक्र, पीताम्बरालंकृत वेङ्कटेश दिव्यमङ्गल विग्रहः विराजते! तथैव नानाविध तीर्थ क्षेत्राण्यपि अस्मिन्नद्रौ विलसिताः सन्ति। किन्तु अनेके जनाः वराहतीर्थमेव दृष्ट्वा स्नानादि कार्याण्याचरन्ति! तादृश पुण्यतीर्थाः षष्ट्युत्तरत्रिशतसंख्याकाः (३६०) तिरुमलक्षेत्रे विद्यन्ते। तेषु

**''स्वामिपुष्करिणी चैव वियद्गङ्गा ततः परम्।**
**पश्चात् पापविनाशश्च पाण्डुतीर्थं ततः परम्''।।**
**कुमार धारिका तीर्थं तुम्बोस्तीर्थं ततः परम्।**
**कृष्णतीर्थमितिख्यातं सर्वपापहरं शुभम्।।**
**तत्र स्नान्ति ये मर्त्याः ते यान्ति परमं पदम्।**
**वर्षे वर्षे च तीर्थानां सप्तानां पर्वतोत्तमे'' ।।**

इति ब्रह्माण्डपुराणे वेङ्कटाचल माहात्म्ये सप्ततीर्थानां वैशिष्ट्यं वर्णितम्। तेषु रामकृष्ण तीर्थं अत्यन्तं सुप्रसिद्धं भवति। तदर्थमेव रामकृष्ण तीर्थं तीर्थराजमिति वदन्ति। अस्य तीर्थस्य उत्सवः कदा भवतीत्युक्तौ।

**''मकरस्थे रवौराजन् पौर्णमास्यां महातिथौ।**
**पुष्यनक्षत्र युक्तायां स्नानकालो विधीयते।।**

अर्थात् मकर राशौ सूर्यः तिष्ठन् तदा पौर्णमास्यां पूष्यमी नक्षत्रे स्नानकालः रामकृष्ण तीर्थे विहितः। इति ब्रह्माण्ड पुराण वेङ्कटाचलमाहात्म्ये उक्तम् विद्यते। इदानीं माहात्म्यं पश्यामः-

एकदा सूतमहामुनिः महर्षिभ्यः रामकृष्ण तीर्थ माहात्म्यं विवृणुतवान्।

पूर्वं कृष्णो नाम कश्चन मुनिः वेङ्कटाद्रौ स्थिर स्वांतेन तपमाचरन् आसीत्। सः तस्य स्नानाय तत्र सरोवरमेकं निर्मितवान्। तस्य वैशिष्ट्यं किमितिचेत् ये कृतघ्नाः भवन्ति। ते तस्मिन्सरोवरे स्नानं कुर्वन्ति चेत् पापविमुक्ताः भवन्ति। तदा सः रामकृष्णः सत्यवाक्, शीलवान् वाग्मी, सर्वभूत दयान्वितः जितेन्द्रियः परे ब्रह्मणिनिष्णातो भूत्वा अण्वन्तरमपि तस्य स्वस्थानादचलित्वा शतवर्षाणि यावत् गाढ तपाचरणं कुर्वन्नस्ति। तं परितः वल्मीकः आगतः। तत्वबुद्ध्यतः एव तपाचरणं कुर्वन्नस्ति। तत् दृष्ट्वा देवेन्द्रः वेगेन मेघान् संप्रेष्य दिन सप्तकं यावत् निरन्तर वृष्टिं कारितवान्। तदापि नेत्रद्वयं निमील्य एव धारापात वर्षं सोढवान्। एकदा एकः अशनिपातः वल्मीके पतितः तदा वल्मीकस्य शिखर ध्वंसः जातः। ततः परं शंखचक्रगदा तदा धरः विनतानन्दनारुढः वनमालाभूषितः श्रीमन्नारायणः रामकृष्ण तपसा संतुष्टः सन् पत्यक्षो भूत्वा इत्थं उक्तवान्। हे तपोनिधे! रामकृष्ण! वेदशास्त्रार्थ पारग! यः अस्मिन् दिवसे अर्थात् माघपौर्णम्यां अस्मिन् तीर्थे स्नानं करोति तस्य पुण्यफलं वक्तुं शेषेणापि न शक्यते। यः मतिमान् अत्र स्नानं करोति सः सर्वपाप विनिर्मुक्तो भूत्वा सर्वकामानवाप्नोति। यदा अहं अवतरितः तदा अत्र स्नातुं देवाः अपि समागत्य तेषां पापापनोदनं कुर्वन्ति। ये महानुभावाः अत्र समायात्य स्नानं कुर्वन्ति ते कोटि सूर्य समप्रभाः भूत्वा पूत गात्राः भविष्यन्ति इत्युक्त्वा हे रामकृष्ण! भवतः नाम्ना एव अयं तीर्थ राजः प्रख्यातिं प्राप्स्यति इत्यत्र नास्ति शङ्कालेशः इत्युक्त्वा श्रीनिवासः तत्रैव अन्तरधीयत।

एतादृश रामाकृष्णतीर्थमाहात्म्यं सूत महामुनिः स्व शिष्येभ्यः प्रोक्तवान्।

तदर्थं वयमपि माघ पौर्णम्यां पावन रामकृष्णतीर्थे स्नानं करिष्यामः! तथैव तेन पुण्येन शुद्ध मनस्काः भूत्वा






# महाशिवरात्रिः

एन्. नागेश्वररावः
चरवाणि - ९७०५८०२३२८

प्रतिसंवत्सरं माघमासे कृष्णचतुर्दश्यां महाशिवरात्रि महोत्सवः प्रचलति। महाशिवरात्रि महोत्सवस्य विशेषाः साङ्गोपाङ्गं हेमाद्रिव्रतखण्डे कृष्णयजुर्वेदे स्कान्दलिङ्गं भविष्यपुराणेषु इशानासंहितायां च अभिवर्णिताः। तत्र महाशिवरात्रि पर्वणः, शिवस्य महिमा विशेषाश्च सम्यक् निगदिताः अस्य महोत्सवस्य आचरणेन, कथा श्रवणेन च जनेषु भक्तिभावः उत्पद्यते।

हे पार्वतीश चन्द्रशेखर गङ्गाधर नीलकण्ठ शिवशंभो शर्वमहेश्वर शङ्करगिरीश महादेव पशुपते पाहि। त्रिपुरासुरमथने मन्मथदहने जितानां संहारे अग्निसूर्यचन्द्रनयने अनुकम्पप्रभूतधने फाललोचने मम हृदयं सर्वदा भवतु। दक्षयज्ञनाशाय हे शङ्कर यः मनुजः प्रातःकाले स्नानं कृत्वा भस्मविलिप्तशरीरः ''ओं नमः शिवाय'' इति प्रासदपञ्चाक्षरी मन्त्रं जप्त्वा त्वां मनसि निधायं ''नमस्ते रुद्र मन्यवे'' इत्यादि रुद्रानुवाकं पठन् शिवलिङ्गे बिल्वपत्रैः अनन्य मनसा रुद्राक्षमालाधारी पूजयेत्, तस्य अभीष्टसिद्धिः हस्तगतः संसृतेः (संसारसागरात्) मुक्तिः भवेत्। सन्ध्यासमये ताण्डवनृत्यकरणे आसक्तचित्तं, नागेन्द्रहाराधारणेन उज्ज्वलं, ब्रह्मविष्णुमहेन्द्रादिसुरबृन्दस्य आनन्दप्रदायकं, भक्तश्रेण्याः इष्टार्थसिद्धिदायकं, गंङ्गाधरं, शङ्करं, गौरीशं, परमेश्वरं, पशुपतिं, चन्द्रशेखरं अर्चामि। दुष्टात्मा दुश्शीलः पापनिलयः दुर्जन इति भवत्कृपायाः असौ नार्ह इति हे पशुपते मां त्यजसि चेत् त्वं नामातिसुलभ शिवेत्यक्षरद्वयं जप्त्वा तव कृपायाः यद्यत् अभीष्टं सिध्यति तत्तत् सर्वं हि अहं लभै।

स्रोतस्विनी (नदी) बहु प्रवाह गत काष्ठसदृशः सुदुष्कर्म प्रवाह निमग्नः अगतिकः दीनः भवामि। वेगेन तस्य परितः चाल्यमानः किल संसारसागरं प्राप्नोमि, हे शम्भो अद्य तीरं नयतात्। यः मनुजः माघमासे कृष्णपक्षे चतुर्दश्यां उपवासं जागरणं च कृत्वा यामिन्यां (रात्रौ) शिवलिङ्गदर्शनं करोति सः मनुष्यः यदृच्छयापि मुक्तिं लभेत।

हे मनुज यद्वा इष्टं कर्म कुरु, यद्वा इष्टं भाषणं वद, यत्किमपि मन्यस्व वा, यत् किमपि भोक्ता वा उपवास वा जोषं च राधि, कामदहनकर्तारं महादेवं मन्तुं न विस्मर।

हे श्री कण्ठेश्वर धूर्जटे पशुपते दक्षयज्ञनाशकृत् प्राणिनाथ प्रमथगणस्य अधिपते गिरिनिवासिन् श्रीपार्वतीवल्लभ मन्मथशत्रो यमनिग्रह अन्धकासुर शत्रो गङ्गाधर त्र्यंबक शंभो शङ्कर वामदेव करुणापयोनिधे मां रक्ष। हे नीललोहित त्वां सहस्रपद्मैः समर्चयन् नन्दिवाहनधिरूढ त्रिपुररक्षोगणविध्वंसक दक्षयज्ञविनासक त्रिनेत्रावतंसित शिरसि चन्द्रेण प्रकाशित दाक्षायणी प्रियपते कुबेरसखआदिभिक्षो भवदाराधनतत्परस्य




अद्य मे पुरतः साक्षात्कारं कुरु। ब्रह्मगरुडवाहनाभ्यां (विष्णुभ्यां) नुत हे शम्भो! मां दयया वीक्षस्व।

देवासुरसमूहैः मत्स्यमाने क्षीरसागरे अखिलभुवन दाहसमद्भूते कालकूटविषे, नारायणाद्रौ कम्पमाने देवतासमूहे, हे नीलकण्ठ! त्वं जगद्रक्षणार्थं गरलं पीतवान्।

निरन्तरं हृदयान्तरे यत् अन्धकासुरस्य नाशकंस्मरान्तकं त्रिपुरनाशकंदक्षयज्ञनाशकं भवसागरस्य विध्वंसकं सकल जगच्छंकरं सदा शुभकरं सर्वदा भजामि। मां यमधर्मराजः किं करोतु मम जन्मान्तरं कथं भवेत्। पञ्चभूतानां पृथिव्यप्तेजोवाय्वाकाशानां पुष्पवत् धरन्तं गङ्गाधरं जडा एव कदम्बवत् भरन्तं महेश्वरं सूर्यचन्द्राग्निलोचनं मार्कण्डेयबन्धमोचनं हैमवतीमनोहरं चन्द्रसेखरं भजामि। हे महादेव त्वां वेदाध्ययनसम्पन्नाः विप्राणां दैवमित्याहुः त्वं मोक्षाभिलाषिणां ज्ञानप्रदाता असि, त्वं संसारसागरनिधानं तर्तुं नौः भवसि। हे चन्द्रमौले तस्मात्वत्पदाम्बुजं सेवे।

ऋग्यजुस्सामाथर्वणवेदानां अध्ययनं, श्रौतस्मार्तकर्म समूहस्य अनुष्ठानं, यज्ञयागादि क्रतूनां आचरणे आसक्तिः, कामक्रोधलोभ - मोहाद्यरिषड्वर्गदमनं, योगाभ्यास -साधनं, सत्याहिंसनशान्ति -दान्तिकलनं त्वां विना मम नास्त्येव, संसारसागरतारकं गिरिसुताजाने (हैमवतीनाथ) त्वां विना परं दैवं न जाने। श्वेत पद्मदलायताक्षः कन्नप्पनामकभक्तः त्वन्मुखात् एकं प्रसूनं (पुष्पं) अधः पतितं अवेक्ष्य भक्तिभावेन स्वस्य नेत्रकमलं उत्पाट्य तव समर्पयामास। हे फालनेत्र भिक्षो भव त्रिलोकनाथ भूतपते भीम धृतबालचन्द्र औषध भैरवस्वरूप भोगीशहार(नागाभरण) प्राणिनां आत्मस्वरूप मां पाहि।

हे श्रीकण्ठ शुभकर हिमवत् पुत्रिकानाथ गङ्गाधर इन्दुशिशुशेखर गरलकण्ठ ईशान पुष्पबाणसूदन यम यम आर्तानां आर्तिहारहर अस्मान् संकटात् मोचय। श्रीपरमेश्वरस्य वैदिकसाहित्ये पुराणेषु च बहुप्रकारं वैशिष्ट्यं वर्तते। श्रीपरमेश्वरस्य महिमा विशेषाः वेदमन्त्रेषु स्कान्दादिषु तामसपुराणेषु अष्टोत्तर सहस्रनामस्तोत्रेषु च बहुधा कीर्तिताः विलसन्ति।

उदाः नमस्ते रुद्रमन्यव उतोत इषवे नमः।
नमस्ते अस्तु धन्वने बाहुभ्यामुतते नमः॥
(तै.सं.४काण्डे, ५प्रश्नः)

शिवो महेश्वरश्शंभुः पिनाकी शशिशेखरः।
वामदेवो विरूपाक्षः कपर्दी नीललोहितः॥ ( शिवाष्टोत्तरम्)
ओम् स्थिरः स्थाणुः प्रभुर्भीमः प्रवरो वरदो वरः।
सर्वात्मा सर्वविख्यातस्सर्वस्सर्वसर्वकरो भवः॥ (शिव.स.स्तो.)











# भक्तसेवायाम्

तिरुमल १९ डिसेंबर् २०१९ गुरुवारः श्रीवेङ्कटेश्वर दर्शनार्थं तिरुमलक्षेत्र मागतस्य विशाख शारदापीठाधिपतिं श्री श्री श्री स्वरूपानन्देन्द्र स्वामिनं ति.ति.दे. पालकमण्डलि अध्यक्षः श्री वै.वि.सुब्बारेड्डि कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् सहायककार्य - निर्वहणाधिकारी श्री ए.वि.धर्मरेड्डि महाभागाः गुरुवासरे मार्यादपूर्वकं सम्मिलिताः। अध्यक्षाः पत्रिकाप्रमुखैः भाषमाणाः सनातन धर्मप्रचारे भागत्वेन प्रतिमासं तिरुमल अथवा तिरुपति क्षेत्रे पीठाधिपतिभिः धार्मिक कार्यक्रमान् आयोजयिष्यामः इत्यूचुः।

तिरुपति २७ डिसेंबर् २०१९ शुक्रवारः तिरुमल श्रीस्वामिनः दर्शनार्थं आगच्छतां भक्तानां तिरुपति पट्टने निवासौकर्याणां भागत्वेन अलिपिरि समीपे ति.ति.दे. पालकमण्डलिअध्यक्षाः वै.वि.सुब्बारेड्डि महोदयाः इंजिनीरिंग् अधिकारिभिः साकं स्थलं परिशीलितवन्तः। अस्मिन् सन्दर्भे पत्रिकाप्रमुखैः भाषमाणाः ते अलिपिरि समीपे भक्तानां वसतिः क्रियते चेत् तिरुमल क्षत्रे अधिकजन सन्दोह समये टैम् स्लाट् कारयित्वा तिरुपतावेव वसतिः कल्पयितुं अवकाशः भविष्यति इत्यवदन्। अत्र भागत्वेन अलिपिरि समीपे निर्माय माणेषु वसति गृहेषु अन्नप्रसादाः धार्मिक कार्यक्रमाः भजनं, ध्यानं, भक्ति सङ्गीत कार्यक्रमाः प्रचलिष्यन्ति इति व्यवृण्वन्।





डिसेबंर् २०१९ तिरुमल २७ शुक्रवारः तिरुमलस्थ जलाशयेषु आगामिनीषु द्वि वर्षेषु उपयोगाय भक्तानां जलसमृद्धिः वर्तत इंति ति.ति.दे. पालकमंडलि अध्यक्षाः श्री वै.वि.सुब्बारेड्डी महोदयाः उक्तवन्तः। तिरुमल समीपस्थ कुमारधार, पसुपुधार जलाशयौ शुक्रवासरे अधिकारिभिः साकं पर्यशीलयन्। अस्मिन् सन्दर्भे ते पत्रिका विलेखकैः भाषमाणाः गतेषु दशवत्सरेषु अस्मिन् वत्सरे एव तिरुमलस्य जलाशयाः जलेन परिपूर्णाः। श्री स्वामिनः आशीर्भिः अद्य जूलै मासात् विस्तरेण मेघाः वर्षिताः इत्युक्तवन्तः। तदनुगुणं तिरुमलस्य जलाशयेषु तिरुपतिस्थ कल्याणिडाम् जलाशये पूर्णतया जल समृद्धिः वर्तते। इतः परमपि वर्षप्रभावेन जलसमृद्धिर्भविष्यति। एतैस्साकं तिरुमलक्षेत्रस्य शाश्वत जलविनियोगाय रू.४०० कोटि रुप्यकैः बालाजि रिजर्वायर् जलं विनियोक्तु ति.ति.दे. पालकमण्डल्यां निर्धारितः इत्यवदन्।



तिरुमल २८ डिसेंबर् २०१९ शनिवारः वेंकटाचलमाहात्म्ये श्रीनिवास वृत्तान्तं बोधयितुं निर्मित चित्राणां ति.ति.दे. पालकमण्डलेः अध्यक्षाः वै.वि.सुब्बारेड्डि महोदयाः तिरुमलस्थ अन्नमय्य भवने आविष्कृताः।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

# तिरुपतिस्थ श्रीकपिलेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः

## १४-०२-२०२० तः २३-०२-२०२० पर्यन्तम्





**१४-०२-२०२० भृगुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - हंसवाहनम्

**१५-०२-२०२० स्थिरवासरः**
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

**१६-०२-२०२० भानुवासरः**
प्रातः - भूतवाहनम्
रात्रौ - सिंहवाहनम्

**१७-०२-२०२० इन्दुवासरः**
प्रातः - मकरवाहनम्
रात्रौ - शेषवाहनम्

**१८-०२-२०२० भौम्यवासरः**
प्रातः - तिरुच्चि उत्सवः
रात्रौ-अधिकारनन्दिवाहनम्

**१९-०२-२०२० सौम्यवासरः**
प्रातः - व्याघ्रवाहनम्
रात्रौ - गजवाहनम्

**२०-०२-२०२० बृहस्पतिवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - अश्ववाहनम्

**२१-०२-२०२० भृगुवासरः**
प्रातः रथोत्सवः
रात्रौ-नन्दिवाहनम् (महाशिवरात्रिः)

**२२-०२-२०२० स्थिरवासरः**
प्रातः - पुरुषामृगवाहनम्
रात्रौ-(कल्याणोत्सवः) तिरुच्चि उत्सवः

**२३-०२-२०२० भानुवासरः**
प्रातः - सूर्य प्रभ वाहने नटराजस्वामिनः
त्रिशूलस्नानम्
रात्रौ-ध्वजावरोहणम्,
रावणासुरवाहनम्









SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams Printing on 25-01-2020.

तिरुपतिस्थ
श्रीकपिलेश्वरस्वामिनः
वार्षिक ब्रह्मोत्सवः
१४-०२-२०२० तः
२३-०२-२०२० पर्यन्तम्